# ॥ शिवयोगदर्पणम् ॥

भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते ।
ज्ञातव्यं तद् पदं दिव्यं तत्र कालो न विद्यते ॥ १॥

सूर्याचन्द्रमसोर्मध्ये मुद्रां दद्याच्च खेचरीम् ।
निरालम्बे महाशून्ये ब्रह्मचक्रं व्यवस्थितम् ॥ २॥

तत्त्वं बीजं हठः क्षेत्रमौदासीन्यं जलं त्रिभिः ।
उन्मनी कल्पलतिका सद्य एवोद्भविष्यति ॥ ३॥

अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः ।
जनसङ्गश्च लौल्यञ्च षड्भिर्योगो विनश्यति ॥ ४॥

उत्साहो निश्चयं धैर्यं तत्त्वज्ञानार्थदर्शनम् ।
जनसङ्गपरित्यागः षड्भिर्योगः प्रसिद्ध्यति ॥ ५॥

हठं विना राजयोगो राजयोगं विना हठः ।
न सिद्ध्यति ततो युग्मं मनीषी तत् समभ्यसेत् ॥ ६॥

न दृष्टिलक्षाणि न चित्तबन्धो न देशकालौ न च वायुरोधः ।
न धारणा ध्यान परिश्रमो वा समेधमानेसति राजयोगे ॥ ७॥

तारकाग्रस्थितं तेजस्तद्बिन्दुस्यूतिर्ते यदि ।
योगं तारकमित्याहुर्योगिनो ब्रह्मवादिनः ॥ ८॥

भालोर्ध्वगोल्लाटविशेषमण्डले
निरन्तरं चिद्गगने महामनाः ।
सतारकं विस्फुरदीक्षणेन
विलोकयेच्चेत् स तु सिद्धिमाप्नुयात् ॥ ९॥

द्वादशाङ्गुलदूरेऽस्मिन् शिरोदेशे महाप्रभे ।
प्रादेशमात्रव्यायामं ज्योतिःपुञ्जं महाद्भुतम् ॥ १०॥

तद्दर्शनेन सततममृतत्त्वं भविष्यति ।
तारकं दुर्भराम्भोधेस्तारकं मोक्षकारकम् ॥ ११॥

अमनस्कात् सिद्धिरस्मादभ्यासेन भवत्यलम् ।

अतिमूढमतिव्यक्तमतिरम्यमनामयम् ॥ १२॥

आत्मस्थानं परं गुप्तं ज्ञायते गुरुवाक्यतः ।
उन्मेषः प्रतिपच्चक्षुरमावास्यास्तलोचनम् ॥ १३॥

अर्धावलोकनं यत् स्यात् पौर्णमासीं वदन्ति ताम् ।
आदिद्वयं परित्यज्य तृतीयन्तु समभ्यसेत् ॥ १४॥

पौर्णिमादृष्टियोगेन स्थित्वा तारकलक्षणे ।
सावधानेन योगीन्द्रस्तिष्ठच्चेत् स सुखी भुवि ॥ १५॥

तालुमूले द्वादशाङ्गुल्यग्रभागस्य मध्यमे ।
पुरतो बाह्यहीनं चेत् तमोरूपं प्रकाशते ॥ १६॥

तन्मध्यभागे चिद्योनिमनोदृष्ट्या निरन्तरम् ।
विलोकयेच्चेत् तत्काले ज्योतिःपुञ्जं महाद्भुतम् ॥ १७॥

अखण्डेन्दुसमाकारं परं चिन्मयात्मकम् । ?
सत्यज्ञानानन्दरूपं महालिङ्गं प्रकाशते ॥ १८॥

जपयोगानभिज्ञस्य मनःस्थैर्यं न जायते ।
गुरूणा शाम्भवी मुद्रा दत्ता चेल्लभते ध्रुवम् ॥ १९॥

वक्त्रे प्राणानिलं पूर्यं वह्निस्थानानिलं तथा ।
आकुञ्चयेद् गलं किञ्चिन्नादो व्यक्तो भविष्यति ॥ २०॥

निस्संशयेन मनसा वर्तते यदि निश्चलः ।
राजयोगीति विख्यातो योगनिद्रासमाश्रितः ॥ २१॥

अश्रुसम्पातपर्यन्तमाचार्यैस्त्राटकं स्मृतम् ।
व्यापारशून्ये मनसि स्थिरयोस्तारयोर्बहिः ॥ २२॥

चान्द्री कला चिदाकाशादाविर्भवति योगिनः ।
समदृष्टिरवाग्दृष्टिरिति ?? त्रिधा ॥ २३॥ ??
काकाक्षिन्यायतस्तत्र सम्यक् स्याद् बिन्दुदर्शनम् ।
मनः पवनयोगेन यावच्छक्तिप्रधानकम् ॥ २४॥

तावन्मात्रन्तु विश्राम्य चिदाकाशं तु लक्षयेत् ।

आकाशे तिष्ठते सूर्यः सर्वयोगेषु गोपितः ॥ २५॥

लक्षैकलग्ने मनसि ह्यमनस्कं प्रजायते ।
समनस्के तु सञ्जाते स्वरूपं सम्प्रजायते ॥ २६॥

॥ इति शिवगोरक्षकृत शिवयोगदर्पणं सम्पूर्णम् ॥